न स्यान्मुनीश ! लवणेशगृहीतशक्तिः
को वा तरीतुमलमम्बुनिधिं भुजाभ्याम् ? ॥ ४ ॥

भद्रं चकर्थ पशवेऽपि यथा तथा त्वं
तूर्णं कृपापर ! ममैह्यसुरक्षणार्थम् ।
रिष्टाश्रितां खलु धवो महिलां समन्तुं
नाभ्येति किं निजशिशोः परिपालनार्थम् ? ॥ ५ ॥

तीक्ष्णं वचोऽप्यभिहितं मयका हितं यत्
तत् ते भविष्यतितरां फलवृद्धिसिद्ध्यै ।
यत्केलिधाम तपतीश ! भृशं निदाघे
तच्चारुचूतकलिकानिकरैकहेतुः ॥ ६ ॥

आगच्छ कृच्छ्रहर ! हृच्छयचित्रपुङ्खव-
लक्षीकृतां कृशतनुं क्षम ! रक्ष मां त्वम् ।
त्वत्सङ्गमे क्षयमुपैष्यति मेऽतिदुःखं
सूर्यांशुभिन्नमिव शार्वरमन्धकारम् ॥ ७ ॥

उद्यत्तडिद्घनघनाघनगर्जितेऽहि-
भुग्भाविते नभसि नौ नभसीन ! देहे ।
घर्मोत्कटादिरिव दन्तुरतां विषण्णो
मुक्ताफलद्युतिमुपैति ननूदबिन्दुः ॥ ८ ॥

पश्येद्दशीति सखिता मदनादरः किं ?
नृत्यन् मयूरनिकरोऽब्दघटां समीक्ष्य ।
मैत्र्या भवन्ति भगवन् ! प्रभया प्रकर्षं
पद्माकरेषु जलजानि विकाशभाञ्जि ॥ ९ ॥

किं त्वं स नैव चल ! काऽऽगलित [illegible]
अन्याः प्रसूर्जनयिता सह[illegible]

श्यामाऽप्यहं च इति वर्गमिमं विवाह-
भूत्वाऽऽश्रितं[1] य इह नात्मसमं करोति ॥ १० ॥
दृष्ट्वा भवं तमनिमेषविलोकनीयं
नान्यत्र तोषमुपयाति मदीयचक्षुः ।
पीत्वा पयः शशिकरद्युति दुग्धसिन्धोः
क्षारं जलं जलनिधेरशितुं क इच्छेत् ? ॥ ११ ॥
राज्ञो महामृगमदाकुलमण्डलस्य
दैत्यारिमार्गगमनस्य तमोऽदितस्य ।
चक्षुष्य ! चारुचतुराक्षिगतस्य किञ्च
यत् ते समानमपरं न हि रूपमस्ति ॥ १२ ॥
त्वत्सद्वियोगवनमेव गता तथापि
तीव्रातपोद्धतपराभवभाविताऽहम् ।
'शैवेय' ! देव ! जलजाङ्कित ! जातमेतद्
यद् वासरे भवति पाण्डुपलाशकल्पम् ॥ १३ ॥
व्याहारमेड इव मे यदि नो शृणोषि
शब्दादिकं सुखमिदं व्रज हारि हित्वा ।
नेतर्नरा भुवि भवन्ति गताङ्कुशा ये
कस्तान् निवारयति सञ्चरतो यथेष्टम् ? ॥ १४ ॥
ध्यानं विधेहि कुरु रैवतके तपांसि
विद्धीति मां हरिसुतोऽस्थिरमाशु कर्ता ।
यज्जन्ममात्रलघुगात्रजिनांह्रितो नो
किं मन्दराद्रिशिखरं चलितं कदाचित् ? ॥ १५ ॥
तत्रोषितं निधुवनाय समागतास्त्वां
देव्यः समं सहचरैः सुतनुं समीक्ष्य ।

---

१ 'भूत्वा श्रितं' इत्यपि सम्भवति ।

वक्ष्यन्ति मोहिततरा इति कामरूपो
दीपोऽपरस्त्वमसि नाथ ! जगत्प्रकाशः ॥ १६ ॥

त्वद्ध्यानभाज्यपि पुनर्मयि नो गताया-
मिष्टार्थबाधकबृहद्विरहान्धकारम् ।
सद्धर्मधाम्नि सहजोद्यमधौतदोषः
सूर्यातिशायिमहिमाऽसि मुनीन्द्रलोके ॥ १७ ॥

वक्त्रं जिनात्र वसतः प्रणिधानभाजो
विश्वासतो मृगशिशुव्रजचुम्बितं सत् ।
संदृश्यते बहुललक्षणभावितं ते
विद्योतयज्जगदपूर्वशशाङ्कबिम्बम् ॥ १८ ॥

उद्योग एष भवता क्रियतां किमर्थं ?
किं वाऽथ ते नु वरवस्तुन ऊनमस्ति ? ।
त्वामेव वीक्ष्य शितिभं समुदो मयूर्यः
कार्यं कियज्जलधरैर्जलभारनम्रैः ? ॥ १९ ॥

इच्छावरं वरमिति स्वजनेन नुन्ना
वच्मीत्यहं द्रुतकराब्जनिरुद्धकर्णा ।
रत्ने यथा जनतया क्रियतेऽभिलाषो
नैवं तु काचशकले किरणाकुलेऽपि ॥ २० ॥

भव्ये ! मनोहरवरो भविता भवत्याः
किं 'नेमिना'ऽसहशुचा च किमित्थमाल्या ? ।
वाच्यं किमत्र यदि मे न भवानिवान्यः
कश्चिन्मनो हरति नाथ ! भवान्तरेऽपि ॥ २१ ॥

अस्या न दूषणमतो हि भवानसह्यो-
ऽबाधः कृतान्तजनको भवतीश ! सोऽपि ।

सातायं सर्वजगतां च 'शिवा' यमर्कं
प्राच्येव दिग् जनयति स्फुरदंशुजालम् ॥ २२ ॥

चेतश्चमञ्चरिकरीषि दरीश्रितानां
तीव्रैर्व्रतैर्विषमरैवतशृङ्गसङ्गी ।
आदर्शधाम्नि धृतकेवलचक्रिवत् किं
नान्यः शिवः शिवपदस्य मुनीन्द्र ! पन्थाः ? ॥ २३ ॥

पूर्णं व्रतेन भवतु क्रियया गतैः किं ?
कष्टैः कृतं च तपसाऽस्त्वलमन्यकृत्यैः ।
चेत् केवलं शिवसुखाब्जविकाशहेतुं
ज्ञानस्वरूपममलं प्रवदन्ति सन्तः ॥ २४ ॥

बालश्चिखेलिथ सुरैः कृतनर्मकर्मै-
र्धीरो भवंश्च समितौ भुवनेषु जिष्णुः ।
सत्त्वात् पुनः स च गृहीति[1] किमत्र गण्यो
व्यक्तं त्वमेव भगवन् ! पुरुषोत्तमोऽसि ॥ २५ ॥

पूर्वं प्रभो ! प्रबलपूरितपाञ्चजन्यः
के प्रेङ्खि'ताच्युत'भुजा हसितोऽस्य दारैः ।
मौनं श्रितः परिणये विमुखोऽधुनैवं
तुभ्यं नमो जनभवोदधिशोषणाय ! ॥ २६ ॥

त्वं चे'च्छिवा'त्मज इनीश ! शिवाय मे किं ?
'नारिष्टनेमि'रिति चेदशुभच्छिदेऽपि ।
स्वैर्वा निरुक्तवशतो मयि सानुकूलः
स्वप्नान्तरेऽपि न कदाचिदपीक्षितोऽसि ॥ २७ ॥

वेत्थेति नाद्रिवसते ! विशदं ध्रुवं त्वां
सौवं मतं प्रतिविभातमिदं ब्रवीति ।

---

१ '०ति भवास्तु योगी ' इति पाठान्तरम् ।

रागीभवद् विकचकोकनदश्रियाऽरं
बिम्बं रवेरिव पयो धरपार्श्ववर्ति ॥ २८ ॥

स्वामिन् ! 'समुद्रविजया'वनिपालसूनो !
स्तादीश्वरोऽत्र यदहार्यगतिं तवेमाम् ।
कान्ति निवारयति विष्णुपदोदितां क-
स्तुङ्गोदयाद्रिशिरसीव सहस्ररश्मेः ॥ २९ ॥

सारेच्छुदुर्लभमतोऽफलमेव मन्ये
मुख्यं महेश ! महतोऽप्यपरोपकृत् ते ।
सिद्धागमार्थवरमुच्चदशं स्वरूप-
मुच्चैस्तटं सुरगिरेरिव शातकौम्भम् ॥ ३० ॥

उच्चोपलासनमशीतकरातपत्रं
वातोच्चलद्धिततनिर्झरचामरं च ।
देवार्चित ! त्रिकमिहास्तु तवैवमेव
प्रख्यापयत् त्रिजगतः परमेश्वरत्वम् ॥ ३१ ॥

उक्तेष्वमीषु वचनेषु मयाऽमृतानि
जानीध्वमादृतरुषाऽप्यनुरागयुक्त्या ।
नेत्रादिषु प्रथितसाम्यगुणेन मे हि
पद्मानि तत्र विबुधाः परिकल्पयन्ति ॥ ३२ ॥

मत्स्वाम्यहं च मुखनेत्रजितावमुष्या
नीतोष्णतामिति मदेन मृगेण मन्ये ।
दाहाय मे प्रकृतिरीश ! विधोर्यथाऽस्ति
तादृक् कुतो ग्रहगणस्य विकाशिनोऽपि ? ॥ ३३ ॥

अत्रैव पश्य परमां पर ! कैरविण्यां
ज्योत्स्नाप्रिये च वितनोति रतिं शशाङ्कः ।

स्नेहान्वितः परिवृढो विमुखोऽयनं हि
 दृष्ट्वाऽभयं भवति नोभवदाश्रितानाम् ॥ ३४ ॥

माकन्दवृन्दवनराजिपदे निरेनो-
 ऽसह्योऽप्यहो ! सकलकेवलसम्पदाप्तेः ।
सालत्रयं भविभृतं भुवि मोहभूपो
 नाक्रामति क्रमयुगाचलसंश्रितं ते ॥ ३५ ॥

इत्युत्सुका गतिविनिर्जितराजहंसी
 'राजीमती' दृढमतिः सुसती यतीशम् ।
इन्द्रैः स्तुतं ह्युपययाविति नोऽसुखाग्निं
 त्वन्नामकीर्तनजलं शमयत्यशेषम् ॥ ३६ ॥

मत्तालिपाटलमलीमसकामभोगी
 योगीश ! दुर्धरकषायफटोत्कटाक्षः ।
जय्यो जवेन जठरासजनोऽपि तेन
 त्वन्नामनागदमनी हृदि यस्य पुंसः ॥ ३७ ॥

कालोपमं विशददर्शनकृत्यशून्यं
 पक्षद्वयात् सदसतो धृततर्कजालम् ।
मिथ्यात्विशासनमिदं मिहिरांशुविद्धं
 त्वत्कीर्तनात् तम इवाशु भिदामुपैति ॥ ३८ ॥

रत्नत्रयं निरुपमं नरराजहंसाः
 संवित्तिदर्शनचरित्रमयप्रकाशम् ।
क्षित्याप्तसंसृतिपरिश्रमदुःखदाहं
 त्वत्पादपङ्कजवनाश्रयिणो लभन्ते ॥ ३९ ॥

वित्तेन साधकतमेन सुनद्धभावात्
 कैवल्यनार्युरसिजैकरसाभिलाषाः ।

सम्यक्प्रमादसुभृतोऽव्ययतां त्वदीयात्
त्रासं विहाय भवतः स्मरणाद् व्रजन्ति ॥ ४० ॥
पीत्वा वचो जिनपतेरधिगम्य दीक्षां
साऽथार केवलमनन्तसुखं च मोक्षम् ।
आश्रित्य सिद्धवरवस्त्वगदा हि के नो
मर्त्या भवन्ति मकरध्वजतुल्यरूपाः ? ॥ ४१ ॥
काँस्कान् नवानि हसिताब्जशुचीन् गुणांस्ते
येऽनादितो विषमबाणभटेन नद्धाः ।
राज्ञि त्वयीश ! मनुजाः सति सार्वभौमे
सद्यः स्वयं विगतबन्धभया भवन्ति ॥ ४२ ॥
सद्ब्रह्मचार ! जिन ! 'यादव'वंशरत्न !
'राजीमती'नयनकोकविरोकितुल्य ! ।
जुष्टः श्रिया सकलयैकपदे भवेत् स
यस्तावकं स्तवमिमं मतिमानधीते ॥ ४३ ॥
हारावलीं नुतिमिमां द्युतिसन्ततीद्धां
कण्ठे दधाति 'महिमाप्रभ'सूरिराजः ।
यस्ते सदैव रुचिराश्रित'भावरत्नां'
तं 'मानतुङ्गम'वशा समुपैति लक्ष्मीः ॥ ४४ ॥



उपाध्यायश्रीधर्मवर्धनगणिविरचितम्

# ॥ वीरभक्तामरम् ॥

( 'राज्यर्द्धिवृद्धि'इत्यपरनामकं स्वोपज्ञटीकासमलङ्कृतम् )

अवतरणम्—

श्रीआदीशस्तुतिर्यत्र, स्तोत्रं भक्तामराभिधम् ।
श्रीमानतुङ्गाचार्यै-र्विहितं सुप्रभावयुक् ॥ १॥—अनुष्टुप्
तत्काव्यानां समस्तानां, तुर्यतुर्याङ्घ्रिसंग्रहैः ।
समस्यापूरणाच्छ्रेष्ठं, स्तवं वीरजिनेशितुः ॥ २ ॥ ,,
राज्यर्द्धिवृद्धिनामानं, चक्रे श्रीधर्मवर्धनः ।
संक्षिप्तरूपां तट्टीकां, स्वोपज्ञां च सुबोधिकाम् ॥ ३ ॥ ,, ( विशेषकम्[1] )

अथ वीरप्रभोः पूर्वभवोल्लेखस्तन्नामसार्थकता च—

राज्यर्द्धिवृद्धिभवनाद् भवने पितृभ्यां
श्री'वर्धमान' इति नाम कृतं कृतिभ्याम् ।
यस्याद्य शासनमिदं वरिवर्ति भूमा-
वालम्बनं भवजले पततां जनानाम् ॥ १ ॥—वसन्ततिलका (८,६)

श्री'आर्षभिः' प्रणमति स्म भवे तृतीये
गर्भस्थितं तु मघवाऽस्तुत सप्तविंशे ।
यं 'श्रेणिका'दिकनृपा अपि तुष्टुवुश्च
स्तोष्ये किलाहमपि तं प्रथमं जिनेन्द्रम् ॥ २ ॥,, ( युग्मम् )

## टीका

कविर्वक्ति । किलेति निश्चितम् । अहमपि तं जिनेन्द्रं स्तोष्ये । तमिति कं ? यत्तदोरभिसम्बन्धात् श्रीआर्षभिः—भरतचक्रवर्ती यं प्रथमं—पूर्वं प्रणमति स्म । ऋषभस्यापत्यमार्षभिः । स्मयोगे भूतार्थता वक्तव्या, प्रणमति स्मेति प्रणामं चकार । कदा ? तृतीये भवे । इह किल संप्रदायः—श्रीवीरस्य सप्तविंशतिर्भवाः, तत्र तृतीये मरीचिभवे भरतेन पृष्टे श्रीऋषभदेवेन प्रोक्तम्—

1 विशेषक-लक्षणम्—

"द्वाभ्यां युग्ममिति प्रोक्तं, त्रिभिः श्लोकैर्विशेषकम् ।
कलापकं चतुर्भिः स्यात्, तदूर्ध्वं कुलकं स्मृतम् ॥"

"मरीचिरयं मत्पौत्रः, स चतुर्विंशतितमतीर्थंकरो भविष्यति" इति श्रुत्वा वन्दनीयोऽयं "जे[1] अ भविस्संतणागए काले" इति मत्वा भरतः प्रणमति स्म। "त्वन्ताथादी न पूर्वगौ" ( अभिधान–चिन्तामणौ का० १, श्लो० २३ ) इतिवचनात् तुशब्दोऽपरसम्बन्धार्थः । गर्भस्थितं तु यं सप्तविंशे भवे मघवा-शक्रः अस्तौ(षी)त् । ऋषभदत्तभार्याया देवानन्दा-ब्राह्मण्याः कुक्षौ गर्भरूपेण स्थितं हीनकुलावतारत्वेन, चलितासनः शक्रो यं ( गर्भस्थितं ) अवधिना दृष्ट्वा हृष्टः सन् ( शक्रः ) सिंहासनात् समुत्थाय नमोत्थुणमितिस्तोत्ररचनयाऽस्तुत, ततः शक्रस्तवो जातः, सोऽद्यापि सर्वसङ्घेन पठ्यते । च–पुनः, श्रेणिकादिकनृपा अपि यं तुष्टुवुः, विद्यमानस्य श्रीवीरजिनेशस्य मुख्यो नृपो भक्तः श्रीश्रेणिकः । यदाह–"[2]सेणियनिवसिद्धाइयदेवीमायंगजक्खकयसेवेत्ति" । श्रेणिकादिकाः आदिशब्दात् कोणिकोदायनादीनां ग्रहणम् । श्रेणिकादिकाश्च ते नृपाश्च श्रेणिकादिकनृपाः । यं वीरं तुष्टुवुः–स्तवनां चक्रुः, तमहमपि स्तोष्ये इति । अपिशब्दोऽत्रान्याकर्षणद्योतनार्थः । तमिति कं ? प्रथमम् । ननु श्रीआदिजिनेशस्तुतौ प्रथममिति विशेषणं स्पष्टम्, चतुर्विंशतितमस्यार्हतः कथं प्रथममिति विशेषणं चरितार्थं स्यात् ? इत्यत आह––प्रथा–विस्तरा मा–लक्ष्मीः शोभा वा यस्य स प्रथमः । न च सर्वतीर्थकृतां सामान्यमदो विशेषणमिति वाच्यम्, मातापितृभ्यां त्रिशलासिद्धार्थाभ्यां यस्य वर्धमान इति नाम कृतम् । कस्मात् ? भवने–स्वकीयवेश्मनि राज्यर्द्धिभवनात्, राज्यं "स्वाम्यमात्यसुहृत्कोश–राष्ट्रदुर्गबलानि च" ( अमरकोशे श्लो० ७५१ ) इति सप्ताङ्गम्, तद्रूपा ऋद्धिः, तस्या वृद्धिभवनं-राज्यर्द्धिवृद्धिभवनं तस्मात् राज्यर्द्धिवृद्धिभवनात्, धन-धान्य-हिरण्य-कोश-कोष्ठागारादिसर्वर्द्धिवृद्धे-र्वर्धमान इति नाम विहितम्। किंविशिष्टाभ्यां पितृभ्यां ? कृतिभ्यां–सुकृतवद्भ्यां धामवद्भ्यां वा । पुनर्यस्य वर्धमानस्य अद्य–प्रत्यक्षे पञ्चमारके काले इदं–वर्तमानं शासनं–आज्ञावचनं भूमौ–पृथिव्यां वरिवर्ति–सर्वोत्कृष्टतया वर्तते । किंविशिष्टं शासनं ? भवजले-संसारजलनिधौ पततां–निमज्जतां जनानां-मनुष्याणां आलम्बनं-अवलम्बनरूपमित्यर्थः । अत एव राज्यर्द्धिवृद्धि(भवन)त्वात् प्रवर्तमा-नशासनत्वाच्च प्रथा-विस्तरा मा-लक्ष्मीः शोभा वा यस्य ( स ) प्रथमस्तं प्रथममिति एतद् विशेषणं श्रीवर्धमानस्वामिनः शासनाधीश्वरस्य सत्फलितार्थं प्रतिभाति ॥ इति काव्यद्वयार्थः ॥ १–२ ॥

## अन्वयः

भवने राज्य–ऋद्धि–वृद्धि–भवनात् यस्य श्री–'वर्धमानः' इति नाम कृतिभ्यां पितृभ्यां कृतं, भव–जले पततां जनानां आलम्बनं इदं ( यस्य ) शासनं अद्य (अपि) भूमौ वरिवर्ति, यं च श्री–'आर्षभिः' (प्रथमं) तृतीये भवे प्रणमति स्म, गर्भ–स्थितं तु ( यं ) सप्तविंशे मघवा अस्तुत, ( यं ) 'श्रेणिक'–आदिक–नृपाः अपि तुष्टुवुः, तं प्रथमं जिन–इन्द्रं अहं अपि किल स्तोष्ये ।

## શબ્દાર્થ

राज्य=રાજ્ય.
ऋद्धि=સંપત્ત, લક્ષ્મી.
वृद्धि=વધારો.
भवन=થવું તે.

राज्यर्द्धिवृद्धिभवनात्=રાજ્ય–લક્ષ્મીની વૃદ્ધિ થવાને લીધે.
भवने ( मू० भवन )=મહેલને વિષે.
पितृभ्यां ( मू० पितृ )=માતાપિતા વડે.

---

१ ये च भविष्यन्ति अनागते काले ( शक्रस्तवे ) ।

२ 'श्रेणिक'नृप'सिद्धायिका'देवी'मातङ्ग'यक्षकृतसेवः ।

**श्री**=માનવાચક શબ્દ.
**वर्धमान**=વર્ધમાન ( સ્વામી ), ચોવીસમા તીર્થંકર.
**श्रीवर्धमानः**=શ્રીવર્ધમાન.
**इति**=એમ.
**नाम** ( मू० नामन् )=નામ.
**कृतं** ( मू० कृत )=કરેલું.
**कृतिभ्यां** ( मू० कृतिन् )=( ૧ ) સારાં કૃત્યો કરનારા; ( ૨ ) તેજવાળા.
**यस्य** ( मू० यद् )=જેનું.
**अद्य**=આજે.
**शासनं** ( मू० शासन )=શાસન, આજ્ઞા.
**इदं** ( मू० इदम् )=આ.
**वरिवर्ति** ( धा० वृत् )=ઉત્કૃષ્ટપણે વર્તે છે.
**भूमौ** ( मू० भूमि )=પૃથ્વી ઉપર.
**आलम्बनं** (मू० आलम्बन)=આધાર(ભૂત), ટેકા(૩૫).
**भव**=સંસાર.
**जल**=જલ, પાણી.
**भवजले**=સંસાર-સમુદ્રમાં.
**पततां** ( मू० पतत् )=પડતા.
**जनानां** ( मू० जन )=મનુષ્યોના.
**आर्षभिः**=ઋષભસ્વામીના પુત્ર, **ભરત** (રાજેશ્વર).
**श्रीआर्षभिः**=શ્રીભરત ( ચક્રવર્તી ).
**स्म**=ભૂતાર્થવાચક શબ્દ.
**प्रणमति स्म** ( धा० नम् )=નમન કરતા હવા.
**भवे** ( मू० भव )=ભવમાં.
**तृतीये** ( मू० तृतीय )=ત્રીજા.
**गर्भ**=ગર્ભ.
**स्थित** ( धा० स्था )=રહેલ.
**गर्भस्थितं**=ગર્ભ ( અવસ્થા )માં રહેલા.
**तु**=કિન્તુ
**मघवा** ( मू० मघवन् )=ઇન્દ્ર.
**अस्तुत** ( धा० स्तु )=સ્તવતો હવો.
**सप्तविंशे** ( मू० सप्तविंश )=સત્તાવીસમા.
**यं** ( मू० यद् )=જેને.
**श्रेणिक**=શ્રેણિક (રાજા), **અભયકુમાર**ના પિતાશ્રી.
**आदि**=શરૂઆત.
**नृप**=રાજા, ભૂપતિ.
**श्रेणिकादिकनृपाः**=શ્રેણિક પ્રમુખ રાજાઓ.
**अपि**=પણ.
**तुष्टुवुः** ( धा० स्तु )=સ્તુતિ કરી.
**च**=અને.
**स्तोष्ये** ( धा० स्तु )=સ્તવીશ.
**किल**=ખચિત.
**अहं** ( मू० अस्मद् )=હું.
**तं** ( मू० तद् )=તેને.
**प्रथमं**=પહેલવહેલા.
**प्रथ**=વિસ્તીર્ણ.
**मा**=( ૧ ) લક્ષ્મી; ( ૨ ) શોભા.
**प्रथमं**=વિસ્તીર્ણ છે લક્ષ્મી [અથવા શોભા] જેની એવા.
**जिन**=રાગ-દ્વેષને જીતનારા, વીતરાગ.
**इन्द्र**=મુખ્ય.
**जिनेन्द्रं**=જિન-પતિને.

## શ્લોકાર્થ

**વર્ધમાન (મહાવીર) સ્વામીના પૂર્વ ભવો તેમજ તેમના નામની સાર્થકતા—**

"( પોતાના ) મહેલમાં રાજ્ય-સંપત્તિની વૃદ્ધિ થવાને લીધે, સારાં કૃત્યો કરનારાં [ અથવા પુણ્યશાળી અથવા તેજસ્વી ] એવાં માતાપિતાએ જેનું **વર્ધમાન** એવું નામ પાડ્યું, તેમજ સંસાર-સમુદ્રમાં પડતા ( અર્થાત્ ડૂબતા ) મનુષ્યોના આધારભૂત એવું જેનું આ શાસન અત્યારે ( આ પંચમ કાલમાં પણ ) પૃથ્વી ઉપર સર્વોત્કૃષ્ટપણે વર્તે છે, તથા વળી પહેલવહેલાં તો

૧ ( ૧ ) સ્વામી, ( ૨ ) વજીર, ( ૩ ) મિત્ર, ( ૪ ) ખજાનો, ( ૫ ) રાષ્ટ્ર, ( ૬ ) કિલ્લો અને ( ૭ ) સૈન્ય એ રાજ્યનાં સાત અંગો છે.

૨ ધન, ધાન્ય, સુવર્ણ, કોશ, કોઠાર ઇત્યાદિ સંપત્તિ.

૩ **ત્રિશલા** રાણી અને **સિદ્ધાર્થ** રાજા એ **વર્ધમાન** સ્વામીનાં માતાપિતા થતાં હતાં.

૪ જૈન શાસ્ત્રમાં કાલના 'ઉત્સર્પિણી' અને 'અવસર્પિણી' એમ બે મુખ્ય વિભાગો પાડવામાં આવ્યા છે. આ બે વિભાગો મળીને એક 'કાલ-ચક્ર' થાય છે. આવાં અનંત કાલ-ચક્રો પસાર થઇ ગયાં છે અને થશે. ઉપર્યુક્ત કાલચક્રના ઉત્સર્પિણી અને અવસર્પિણી એમ બંને વિભાગોના ૭ ૭ વિભાગો પાડવામાં આવ્યા છે આ પ્રત્યેક વિભાગને 'આરા' (सं० अर) કહેવામાં આવે છે. અત્ર પંચમ કાલથી અવસર્પિણીનો પાંચમો આરો સમજવાનો છે.

જેને શ્રીઋષભ(દેવ)ના પુત્ર (ભરત ચક્રવર્તી) ત્રીજા ભવમાં પ્રણામ કરતા હવા અને (ત્યાર પછી) ગર્ભાવાસમાં રહેલા એવા જેને સત્તાવીસમા (અંતિમ) ભવમાં (સૌધર્મ દેવલોકના શક્ર) ઇન્દ્ર સ્તવતા હવા, તેમજ જેની શ્રેણિક પ્રમુખ પૃથ્વીપતિઓએ પણ સ્તુતિ કરી, તે (પોતાના પિતાશ્રીની રાજ્ય-સંપત્તિની વૃદ્ધિના કારણભૂત હોવાને લીધે તેમજ અત્યારે પણ તેનુંજ શાસન ચાલતું હોવાને લીધે) વિસ્તીર્ણ છે લક્ષ્મી [ અથવા શોભા ] જેની એવા (**વર્ધમાન, વીર, મહાવીર, દેવાર્ય** ઇત્યાદિ નામોથી પ્રસિદ્ધ) જિનેશ્વરની હું (**ધર્મવર્ધનગણિ**) પણ ઉચિત સ્તુતિ કરીશ."—૧-૨

## સ્પષ્ટીકરણ

**વર્ધમાનસ્વામી—**

આ કાવ્ય દ્વારા કવિવર **વર્ધમાન**સ્વામીના જીવન-ચરિત્ર ઉપર પ્રકાશ પાડે છે. તેમાં પ્રથમ શ્લોકમાં તો તેમના પૂર્વ ભવ વિષે ઉલ્લેખ કરવામાં આવ્યો છે અને સાથે સાથે તેમનું નામ ચરિતાર્થ છે એમ સિદ્ધ કરવામાં આવ્યું છે. આ કાવ્યના નાયક ચોવીસમા તીર્થંકર **વર્ધમાન**સ્વામીના ગર્ભાવાસના સંબંધમાં જે આશ્ચર્યજનક ઘટના બની હતી, તેનું અત્ર દિગ્-દર્શન કરાવવામાં આવે છે, પરંતુ તે પૂર્વે એટલું કહેવું નિરર્થક નહિ ગણાય કે આ નીચે લખેલી ગર્ભ બદલવા સંબંધિની વાત **દિગમ્બરોને** માન્ય નથી, કેમકે તેમની માન્યતા પ્રમાણે મૂલ અંગાદિ રહ્યાંજ નથી અને તેમના ઉદ્ધાર કરેલા ગ્રન્થોમાં આ વાત મળતી નથી.

એમ કહેવામાં આવે છે કે **વર્ધમાન**સ્વામીએ યાને **મહાવીર** પ્રભુએ પોતાના ત્રીજા ભવમાં નિજ કુળ વિષે ઘણો ગર્વ કર્યો હતો. પ્રસંગ એમ બન્યો હતો કે **ભરત** રાજેશ્વર પોતાના પિતાશ્રી પ્રથમ તીર્થંકર **ઋષભ**દેવને નમસ્કાર કરવા ગયા હતા અને ત્યાં તેમણે તે જિનેશ્વરને એવો પ્રશ્ન પૂછ્યો કે હે સ્વામિન્! આપની આ સભામાંથી કોઇ પણ જીવ આપ જેવી ઋદ્ધિ પામશે કે કેમ? આના પ્રત્યુત્તરમાં ભગવાને કહ્યું કે તારો પુત્ર અને મારો પૌત્ર **મરીચિ** ચોવીસમો (અંતિમ) તીર્થંકર થશે. ત્યાર બાદ **નમુત્થુણં** યાને **શક્રસ્તવ**ની અંતિમ ગાથા—

---

૧ **ભરત** કે **ઐરાવત**ના છ ખંડના અધિપતિને અથવા **મહાવિદેહ**ના બત્રીસ વિજયો પૈકી ગમે તે એક વિજયના સ્વામીને 'ચક્રવર્તી' કહેવામાં આવે છે. આ સંબંધી વિશેષ માહિતી માટે જુઓ **શ્રીશોભનમુનીશ્વરકૃત સ્તુતિ-ચતુર્વિંશતિકા**ના ૬૫મા પદ્યનું સ્પષ્ટીકરણ.

૨ જૈન શાસ્ત્રમાં બાર દેવલોક બતાવ્યા છે; તેમાંના પહેલા દેવલોકને **સૌધર્મ** દેવલોક કહેવામાં આવે છે. અત્ર 'દેવલોક' શબ્દથી કલ્પોપપન્ન દેવોનું નિવાસ-સ્થાન સમજવું. જૈન શાસ્ત્રમાં દેવના (૧) **ભુવનપતિ**, (૨) **વ્યન્તર**, (૩) **જ્યોતિષ્ક** અને (૪) **વૈમાનિક** એમ જે ચાર ભેદો પાડ્યા છે, તેમાં વળી વૈમાનિકના **કલ્પોપપન્ન** અને **કલ્પાતીત** એમ બે અવાંતર ભેદો છે. તેમાંના કલ્પોપપન્ન દેવોના બાર નિવાસ-સ્થાન છે. તેનાં નામો નીચે મુજબ છે:—

(૧) **સૌધર્મ**, (૨) **ઈશાન**, (૩) **સનત્કુમાર**, (૪) **માહેન્દ્ર**, (૫) **બ્રહ્મલોક**, (૬) **લાન્તક**, (૭) **મહાશુક્ર**, (૮) **સહસ્રાર**, (૯) **આનત**, (૧૦) **પ્રાણત**, (૧૧) **આરણ** અને (૧૨) **અચ્યુત**.

૩ 'પ્રમુખ' શબ્દથી **કોણિક, ઉદાયન, જિતશત્રુ, અદીનશત્રુ, ચણ્ડપ્રદ્યોત, દશાર્ણભદ્ર** વિગેરે સમજવા.

૪ **આ શબ્દના અર્થ સારુ જુઓ સ્તુતિ-ચતુર્વિંશતિકા (પૃ૦ ૧૪).**

" जे य अईआ सिद्धा, जे अ भविस्संतणागए काले।
संपइ अ वट्टमाणा, सव्वे तिविहेण वंदामि ॥ "—આર્યા

—ના ઉપર ધ્યાન આપીને **ભરત** રાજા પોતાના પુત્ર **મરીચિને** વન્દન કરવા ગયા અને તેમ કરવાનું તેમને આ કારણ પણ જણાવ્યું. આ સાંભળીને **મરીચિએ** વિચાર કર્યો કે ખરે-ખર મારા કુળને ધન્ય છે; કેમકે મારા પિતામહ પ્રથમ તીર્થંકર થયા, વળી મારા પિતા પ્રથમ ચક્રવર્તી થયા, હું પણ પ્રથમ વાસુદેવ થઇશ તેમજ અંતિમ તીર્થંકર પણ થઇશ.

આ મદના કટુ વિપાક તરીકે એ **મરીચિનો** જીવ **પ્રાણત** દેવલોકમાંના **પુષ્પોત્તર** વિમાનથી ચ્યવીને અંતિમ ભવમાં **મગધ** દેશમાંના **ક્ષત્રિયકુણ્ડના** નરપતિ **સિદ્ધાર્થના** રાજ્યમાં રહેતા **ઋષભદત્ત** નામના બ્રાહ્મણની **દેવાનન્દા** નામની પ્રિયાની કુક્ષિમાં અવતર્યો. આ એક અલૌકિક ઘટના છે ( જુઓ કલ્પ-**સૂત્ર**, સૂ૦ ૧૭ ).

ભિક્ષુક કુળમાં આ પ્રમાણે **દેવાનન્દાની** કુક્ષિમાં ૮૨ દિવસો વ્યતીત થયા બાદ **શક્રેન્દ્રનું** આસન કંપ્યું. ત્યારે તેણે અવધિજ્ઞાનથી પ્રભુને ત્યાં ગર્ભમાં રહેલા જોયા. આથી એકદમ હર્ષિત થઇ જઇ પોતાના આસન ઉપરથી નીચે ઉતરી, તેમની તરફ સાત-આઠ પગલાં ચાલી-અંજલિ જોડી તેણે તેમની સ્તુતિ કરી (આ સ્તુતિ **શક્રસ્તવના** નામથી પ્રસિદ્ધ છે). પરંતુ પ્રભુને નીચ કુળમાં અવતરેલા જોઇને તે શોકાતુર થયો, એથી કરીને તેણે તરતજ **હરિણગમેષી** દેવને **ત્રિશલા** રાણીના ગર્ભને અને આ **દેવાનન્દાના** ગર્ભને અદલબદલ કરવા ફરમાવ્યું. તે કાર્ય તે દેવે કર્યું. આમાં તાત્પર્ય એ રહેલું છે કે કદાચિત્ તીર્થંકરનું ચ્યવન નીચ કુળાદિકમાં થાય, પરંતુ જન્મ તો તેવા કુળમાં કદિ સંભવતોજ નથી. આ વાતની **કલ્પસૂત્ર** ( સૂ૦ ૧૮ ) સાક્ષી પૂરે છે. ગર્ભાવાસનો સમય પૂર્ણ થતાં પ્રભુનો જન્મ થયો. આ વાત ઇ. સ. પૂર્વે ૫૯૯ માં બની.

**મહાવીરસ્વામીના સત્તાવીસ ભવો—**

આ શ્લોકમાં **મહાવીરસ્વામીના** સત્તાવીસ ભવો થયા વિષે ઉલ્લેખ છે. આથી કોઇને એમ શંકા ઉપસ્થિત થાય કે શું **મહાવીરસ્વામીના** એટલાજ ભવો થયા છે ? પરંતુ આ શંકા ' ભવ ' ની ગણતરીના રિવાજની અજ્ઞાનતા સૂચવે છે. દરેક જીવે અત્યાર સુધીમાં અનેક ભવો

---

૧ સંસ્કૃત-છાયા—

" ये च अतीताः सिद्धाः, ये च भविष्यन्ति अनागते काले ।
संप्रति च वर्तमानाः, सर्वान् त्रिविधेन वन्दे ॥"

૨ ' વાસુદેવ ' એ ત્રણ ખંડના અધિપતિનું નામ છે એનો નીલ વર્ણ હોય છે. એને ' અર્ધ-ચક્રવર્તી'ના નામથી પણ ઓળખવામાં આવે છે. એક કાલ-ચક્રમાં ૧૮ વાસુદેવો થાય છે, અર્થાત્ ' ઉત્સર્પિણી ' તેમજ ' અવ-સર્પિણી ' કાલમાં નવ નવ વાસુદેવો થાય છે. વાસુદેવના વડીલ બંધુને ' બલદેવ ' કહેવામાં આવે છે, જ્યારે તેના પ્રખર શત્રુને ' પ્રતિવાસુદેવ ' કહેવામાં આવે છે.

એ ધ્યાનમાં રાખવું કે વાસુદેવો નિયાણું બાંધવાવાળા હોય છે, જ્યારે બલદેવો તેવું કાર્ય કરતા નથી. વળી વાસુદેવો અધોગામી છે, જ્યારે બલદેવો ઊર્ધ્વગામી છે ( સરખાવો **આવશ્યક-નિર્યુક્તિ**, ૪૧૫ મી ગાથા ).

આ ' અવસર્પિણી ' કાલમાં શ્રીકૃષ્ણ નવમા વાસુદેવ, તેમના ભાઇ **બલરામ** નવમા બલદેવ અને **રાવણ** એ નવમા પ્રતિવાસુદેવ થઇ ગયા છે. વિશેષમાં આ સર્વેને ' શલાકાપુરુષ ' એવી સંજ્ઞા આપવામાં આવે છે.

કર્યા છે; પરંતુ જે ભવમાં જીવને સમ્યક્ત્વની[1] પ્રાપ્તિ થાય છે, ત્યારથી તેના ભવ ગણાય છે. કેમકે સમ્યક્ત્વરૂપી બીજની પ્રાપ્તિ વિના તે પૂર્વેના અન્ય ભવરૂપી ભ્રમણાઓ શૂન્યજ છે. વિશેષમાં આ સત્તાવીસ ભવોથી મોટા ભવો સમજવાના છે; કેમકે વચ્ચે વચ્ચે બીજા ભવો પણ થયેલા છે, પરંતુ તે મહત્વના નહિ હોવાથી અત્ર તેની ગણના કરવામાં આવી નથી. ઉપર્યુક્ત સત્તાવીસ ભવો **ત્રિષષ્ટિશલાકાપુરૂષચરિત્ર** તેમજ **સુબોધિકા** પ્રમાણે નીચે મુજબ છે:—

( ૧ ) **નયસાર**, ( ૨ ) **સૌધર્મ**વાસી દેવ, ( ૩ ) **મરીચિ**, ( ૪ ) **બ્રહ્મલોક**વાસી દેવ, ( ૫ ) **કૌશિક** ( બ્રાહ્મણ ) ( ભવ-ભ્રમણ ), ( ૬ ) **પુષ્પમિત્ર**, ( ૭ ) **સૌધર્મ**વાસી દેવ, ( ૮ ) **અગ્નિદ્યોત** ( બ્રાહ્મણ ), ( ૯ ) **ઈશાન**વાસી દેવ, ( ૧૦ ) **અગ્નિભૂતિ** ( બ્રાહ્મણ ), ( ૧૧ ) **સનત્કુમાર**વાસી દેવ, ( ૧૨ ) **ભારદ્વાજ** ( બ્રાહ્મણ ), ( ૧૩ ) **માહેન્દ્ર**-વાસી દેવ (ભવ-ભ્રમણ), ( ૧૪ ) **સ્થાવર** ( બ્રાહ્મણ ), ( ૧૫ ) **બ્રહ્મલોક**વાસી દેવ, ( ૧૬ ) **વિશ્વભૂતિ** ( ક્ષત્રિય ), ( ૧૭ ) **મહાશુક્ર** દેવલોકમાં દેવ, ( ૧૮ ) **ત્રિપૃષ્ઠ** ( વાસુદેવ ), ( ૧૯ ) સાતમી નરકમાં નારકી, ( ૨૦ ) સિંહ, ( ૨૧ ) ચોથી નરકમાં નારકી ( ભવ-ભ્રમણ ), ( ૨૨ ) મનુષ્ય, ( ૨૩ ) **પ્રિયમિત્ર** ( ચક્રવર્તી ), ( ૨૪ ) **મહાશુક્ર** દેવલોકમાં દેવ, (૨૫) **નંદન**, (૨૬) **પ્રાણત** દેવલોકવાસી દેવ અને ( ૨૭ ) **મહાવીર**.

આ સંબંધમાં નીચેની ગાથાઓ વિચારવા જેવી છે.

“[2]**गामाविक्खग १ सोहम्म २ मरिइ ३ पण कप्प ४ कोसिय ५ सुहम्मे ६ ।**
**मरिऊण पुस्समित्ते ७ सोहम्मे ८ भिज्जोय ९ ईसाणे १० ॥**
**अग्गिभूई ११ तियकप्पे १२ भारद्दाए १३ महिंद १४ संसारे ।**
**थावरय १५ बंभिभव १६ विस्सभूइ १७ सुक्के य १८ तेविट्ठू १९ ॥**
**अपइट्ठाणे २० सीहे २१ नरए २२ भमिऊण चक्कि पियमित्ते २३ ॥**
**सुक्के २४ नंदण नरवइ २५ पाणयकप्पे २६ महावीरो २७ ॥**

—શ્રીવિચારસાર-પ્રકરણ, ગાથાંક ૭૬–૭૯

આ સંબંધમાં **આવશ્યક–નિર્યુક્તિ**ની ૪૪૦–૪૫૭ સુધીની ગાથાઓ પણ જોવા જેવી છે.

**ભરત નરેશ્વર**—

આ અવસર્પિણી કાલમાં ઉત્પન્ન થયેલા પ્રથમ તીર્થંકર **શ્રીઋષભદેવના ભરત** નરેશ્વર પુત્ર થાય છે. **નાભિ**[3] અને **મરૂ** એ તેમનાં દાદાદાદીનાં નામો છે, જ્યારે તેમની માતુશ્રીનું નામ તો **સુમં-**

૧ ‘ સમ્યક્ત્વ ’ એટલે ‘ યથાર્થ શ્રદ્ધાન. ’ વાસ્તવિક દેવને વિષે દેવત્વની બુદ્ધિ, ખરેખરા ગુરૂને વિષે ગુરૂત્વની બુદ્ધિ અને સાચા ધર્મને વિષે ધર્મપણાની બુદ્ધિ રાખવી તે ‘ સમ્યક્ત્વ ’ છે.

૨ સંસ્કૃત-છાયા—

“ ग्रामवीक्षकः सौधर्मः मरीचिः पञ्चमकल्पः कौशिकः सौधर्मः ।
मृत्वा पुष्पमित्रः सौधर्मः अग्निज्योतिः ईशानः ॥
अग्निभूतिः तृतीयकल्पः भारद्वाजः माहेन्द्रः संसारः ।
स्थावरश्च ब्रह्मभवः विश्वभूतिः शुक्रे त्रिपृष्ठः ॥
अप्रतिष्ठानः सिंहः नरके भ्रान्त्वा चक्री प्रियमित्रः ।
शुक्रे नन्दनः नरपतिः प्राणतकल्पे महावीरः ॥ ”

૩ આ પ્રથમ જિનેશ્વરના પિતાશ્રીના જીવનની સ્થૂલ રૂપરેખા **સ્તુતિ-ચતુર્વિંશતિકા** ( પૃ૦ ૮–૯ ) માં આલેખવામાં આવી છે.

ગલા છે. વિશેષમાં **બ્રાહ્મીનો** જન્મ પણ તેમની સાથેજ થયો હતો, અર્થાત્ **સુમંગલા દેવીએ ભરત** અને **બ્રાહ્મીના** યુગલને જન્મ આપ્યો હતો. અપર માતા **સુનંદા** દેવીના **બાહુબલિ** પ્રમુખ ૯૯ પુત્રો તેમના ભાઇઓ થતા હતા અને **સુન્દરી** નામની પુત્રી એ તેમની બેન થતી હતી. તેઓ ભરતક્ષેત્રના છ ખંડ સાધીને ચક્રવર્તી બન્યા હતા. દરેક ચક્રવર્તીની પાસે જેમ ચૌદ રત્નો હોય છે, તેમ તેમની પાસે પણ હતાં. સાધારણ રીતે એમ કહેવાય છે કે ગૃહવાસમાં કેવલજ્ઞાન થવું મુશ્કલ છે, પરંતુ આ મહાત્માને તેવું જ્ઞાન પણ પોતાના રાજ્ય-ભુવનમાં રહેવા છતાં થયું હતું, એ તેમની બલિહારી સૂચવે છે. કિન્તુ આનું કારણ એ છે કે જોકે તેઓ તે વખત સંસારરૂપી કાદવમાં રહેતા હતા, છતાં તેમનું હૃદયરૂપી કમલ તો નિર્લેપજ હતું. તેઓ તે વખત 'अनित्यं ससारे भवति सकलं यन्नयनगम्' અર્થાત્ 'જે જે વસ્તુ આ સસારમાં દૃષ્ટિ-ગોચર થાય છે, તે અનિત્ય છે' એવી ભાવના ભાવતા હતા, તેનુંજ આ પરિણામ હતું. આ **ભરત** રાજર્ષિને પ્રણામ કરી તેમના વિષેનો ઉલ્લેખ અત્ર સમાપ્ત કરવામાં આવે છે.

**શ્રેણિક નૃપતિ**—

**શ્રેણિકના** પિતાનું નામ **પ્રસેનજિત્** હતું, જ્યારે તેમની માતાનું નામ **ધારણી** હતું. યોગ્ય વયે તેઓ **મગધ** દેશમાંની **રાજગૃહી** નગરીના સ્વામી બન્યા હતા. તેઓને **ચિલ્લણા** પ્રમુખ રાણીઓ હતી. રાણી **ચિલ્લણા** તેમના જેવી સૌન્દર્યની એક અનુપમ મૂર્ત્તિ હતી.[2] આ બન્નેના સૌન્દર્યને જોઇને તો સમવસરણમાં **મહાવીરસ્વામી** વિરાજમાન હોવા છતાં પણ તેની પર્ષદામાંના અનેક લોકો મોહમુગ્ધ બન્યા હતા અને તે એટલે સુધી કે સાધુઓમા ફક્ત **ગૌતમ** સ્વામી ( **ઇન્દ્રભૂત** ) અને સાધ્વીઓમાં **ચન્દનબાલા** કોરાં રહી ગયાં હતાં.[3] આ **શ્રેણિક** રાજાને **અભયકુમારાદિક** પુત્રો હતા. **શ્રેણિક** રાજા **વીર** પ્રભુના પરમ ભક્ત ગણાય છે. તેઓ આ 'અવસર્પિણી' કાલ પૂરો થયા બાદ 'ઉત્સર્પિણી'ના ત્રીજા આરામાં પ્રથમ તીર્થંકર થનાર છે, જોકે અત્યારે તો તેઓ પ્રથમ નરકમાં છે.[4]

---

૧ ચૌદ રત્નોની માહિતી માટે જુઓ **જમ્બૂદ્વીપ-પ્રજ્ઞપ્તિ**, તૃતીય વક્ષસ્કાર.

૨ આ **ચિલ્લણા** રાણીના સંબંધમાં એમ કહી શકાય કે—

"सा रामणीयकनिधेरधिदेवता वा
सौन्दर्यसारसमुदायनिकेतनं वा ।
तस्याः सखे ! नियतमिन्दुसुधामृणाल-
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥"

—માલતી-માધવ

અર્થાત્—તે ( **માલતી** ) રૂપાદિ સંપત્તિના ભંડારની અધિષ્ઠાયિકા દેવી છે અને સૌન્દર્યના સમુદાયનું ઘર છે. હે મિત્ર ! ખરેખર તે ( **માલતી** )નું ઉપાદાન કારણ ચંદ્ર, અમૃત, કમલનો દંડ અને ચંદ્રનો પ્રકાશ આદિ થયેલ છે અને તેનો કર્તા ( સ્રષ્ટા ) કામદેવ બનેલ છે.

૩ આ વાત એ બન્નેનું અનુપમ ચારિત્ર-બળ સૂચવે છે. આવું દૃઢ બ્રહ્મચર્ય પાળનાર તરીકે **સ્થૂલિભદ્રનું** નામ પણ જૈન સમાજમાં જાણીતું છે.

૪ પ્રભુના સેવકની પણ આવી દશા થાય એ 'कर्मणो गहना गतिः' એ સૂત્રને ચરિતાર્થ કરે છે.

આ શ્રેણિક નૃપતિના જીવન ઉપર શ્રીધર્મવર્ધનકૃત સહસ્રશ્લોકપ્રમાણક શ્રેણિક-ચરિત્ર તેમજ શ્રેણિક--કથા પ્રકાશ પાડે છે. આ બંને ગ્રન્થો સંબંધી ઉલ્લેખ જૈન ગ્રન્થાવલી ( પૃ૦ ૨૩૪ અને ૨૬૧ )માં છે. આ ઉપરાંત દુર્ગદ્વ્યાશ્રય કાવ્ય, આવશ્યક-વૃત્તિ, દશવૈકાલિક-વૃત્તિ તેમજ જ્ઞાતાધ્યયનમાંથી તેમને લગતી હકીકત મળી આવે છે.

પદ્ય-વિચાર—

આ ૪૪ પદ્યોનું કાવ્ય શ્રીમાનતુંગસૂરિકૃત ભક્તામર-સ્તોત્રના ચતુર્થ ચરણની પાદ-પૂર્તિરૂપ હોવાથી 'વસન્તતિલકા' છંદમાં રચવામાં આવ્યું છે. એ છંદનું લક્ષણ વસન્તતિલક વૃત્તમાંજ રચાયેલા શ્રીમેરૂવિજયકૃત ચતુર્વિંશતિ–જિનાનન્દસ્તુતિના પૃ૦ ૨-૫ માં વિચારવામાં આવ્યું છે, એથી કરીને અત્ર એ સંબધમાં ઉલ્લેખ કરવામાં આવતો નથી.

* * * * *

अथ तृतीयकाव्ये श्रीभगवतो महावीरस्वामिनो बलाधिक्यमाह–

वीर ! त्वया विदधताऽऽमलिकीं सुलीलां
बालाकृतिश्छलकृदारुरुहे सुरो यः ।
तालायमानवपुषं त्वदृते तमुच्च–
मन्यः क इच्छति जनः सहसा ग्रहीतुम् ॥ ३ ॥

टीका

हे वीर ! त्वया आमलिकीं सुलीलां–शोभनक्रीडां विदधता–कुर्वता यः सुर आरुरुहे –यो देवस्त्वया आरूढः यत्स्कन्धे त्वया चटितमित्यर्थः । किंविशिष्टः सुरः ? छलकृत्–छद्म-कारकः । पुनः किंविशिष्टः सुरः ? 'बालाकृतिः' बालवदाकृतिः–आकारो यस्य सः । तं सुरं त्वदृते–त्वद्विना अन्यो जनो ग्रहीतुं–स्वायत्तीकर्तुं क इच्छति ? न कोऽपीत्यर्थः । किंविशिष्टं तं ? उच्चम् । कीदृशं ? 'तालायमानवपुषं' तालः–तृणराजस्तद्वदा ( तमिवा )चरति तालायते, तालायते ( इति तालायमानं ) तत् तादृक्षं वपुः–शरीरं यस्य स तालायमानवपुस्तं तालायमानवपुषम् । "ऋते योगे पञ्चमी" । त्वत् इति पञ्चम्या एकवचनम् । ऋते इति विनार्थेऽ-व्ययम् । अत्र भगवत आमलिकीक्रीडाप्रबन्धो ज्ञेयः ॥ ३ ॥

अन्वयः

( हे ) 'वीर!' त्वया आमलिकीं सु-लीलां विदधता यः बाल-आकृतिः छल-कृत् सुरः आरुरुहे, तं तालायमान-वपुषं उच्चं (सुरं) सहसा ग्रहीतुं त्वत् ऋते कः अन्यः जनः इच्छति ? ।

---

१ છંદ સંબંધી સ્થૂલ માહિતી માટે જુઓ શ્રીબપ્પભટ્ટિસૂરિકૃત ચતુર્વિંશતિકા (પૃ૦ ૨-૫).

## શબ્દાર્થ

**वीर** ! ( મૂ० वीर )=હે **વીર**, હે **મહાવીર** !
**त्वया** ( મૂ० युष्मद् )=તારા વડે.
**विदधता** ( મૂ० विदधत् )=કરતા.
**आमलिकीं** ( મૂ० आमलिकी )=આમલિકી.
**सु**=પ્રશંસાવાચક અવ્યય.
**लीला**=ક્રીડા.
**सुलीलां**=સુંદર ક્રીડાને
**बाल**=બાળક.
**आकृति**=આકાર.
**बालाकृतिः**=બાળકના જેવો આકાર છે જેનો તે.
**छल**=કપટ, દગો
**कृत्**=કરનાર.
**छलकृत्**=કપટ કરનારો.
**आरुरुहे** ( ધા० रुह )=આરૂઢ થયો
**सुरः** ( મૂ० सुर )=દેવતા
**यः** ( મૂ० यद् )=જે
**तालायमान**=તાડના સમાન
**वपुस्**=દેહ, શરીર.
**तालायमानवपुषं**=તાડસમાન દેહ છે જેનો તેને
**त्वत्** ( મૂ० युष्मद् )=તારા.
**ऋते**=વિના, સિવાય
**तं** ( મૂ० तद् )=તેને.
**उच्चं** ( મૂ० उच्च )=ઊંચો
**अन्यः** ( મૂ० अन्य )=બીજો, અપર.
**कः** ( મૂ० किम् )=કયો.
**इच्छति** ( ધા० इष् )=ઇચ્છે
**जनः** ( મૂ० जन )=મનુષ્ય
**सहसा**=એકદમ
**ग्रहीतुं** ( ધા० ग्रह् )=પકડવાને, વશ કરવાને

## શ્લોકાર્થ

### મહાવીર સ્વામીનું અલૌકિક પરાક્રમ—

"હે **વીર** ( જિનેશ્વર ) ! બાળકના સમાન આકારવાળા અને ( એથી સાધીન થતા ) કપટ કરનારા એવા જે દેવના ઉપર આમલકીની સુક્રીડા કરતો થકો તું આરૂઢ થયો, તે તાડના ( વૃક્ષ ) સમાન દેહવાળા અને ( અત એવ ) ઉચ્ચ એવા દેવને એકદમ વશ કરવાને તારા સિવાય કયો અપર મનુષ્ય ઇચ્છા કરે ?"—૩

## સ્પષ્ટીકરણ

### વીર પ્રભુની ક્રીડા—

એક વખત ઇન્દ્રે સભામાં **વીર** પ્રભુની પ્રશંસા કરીને કહ્યું કે તે અતુલ સામર્થ્યવાળા છે અને વળી ધીર છે. આ વાત એક સુરને ગળે ઉતરી નહિ એટલે તેની પરીક્ષા કરવા તે જ્યાં લગભગ આઠ વર્ષની ઉમ્મરના **વીર પ્રભુ** અન્ય રાજકુમારો સાથે વનમાં રમતા હતા, ત્યાં આવ્યો. આવીને તે કોઇ વૃક્ષના મૂળ પાસે સર્પ થઇને રહ્યો એટલે અન્ય રાજકુમારો તો પલાયન કરી ગયા; પરંતુ **વીર** પ્રભુએ તેને હાથેથી પકડી દૂર ફેંકી દીધો. આથી ફરીથી રાજકુમારો એકત્રિત થઇ ક્રીડા કરવા લાગ્યા એટલે તે સુર પણ રાજકુમાર થઇ ત્યાં રમવા આવ્યો. આ ક્રીડામાં એવી સરત હતી કે જે હારી જાય તે બીજાને પોતાની પીઠ ઉપર વહન કરે. **વીર** પ્રભુ તો હમેશાં જીતતા હતા, તેથી અન્ય રાજકુમારો તેમને પોતાની પીઠ ઉપર વહન કરતા હતા. એવામાં એક વખત પેલો દેવ હારી ગયો એટલે પ્રભુ તેની પીઠ ઉપર ચઢી બેઠા. એટલે તે દુર્મતિ દેવે પોતાનું વિકરાળ રૂપ વિકુર્વ્યું અને પર્વતના કરતાં પણ તે ઊંચાઇમાં વધવા લાગ્યો. આ રૂપનું વર્ણન કરતાં શ્રીહેમચન્દ્રસૂરિ ત્રિષષ્ટિશલાકાપુરૂષચરિત્રમાં લખે છે કે—

" ततः करालं वेताल–रूपमाधाय दुष्टधीः ।
भूधरानप्यधरयन्, प्रारब्धो वर्धितुं सुरः ॥
पातालकल्पे तस्यास्ये, जिह्वया तक्षकायितम् ।
पिङ्गैस्तुङ्गे शिरःशैले, केशैर्दावानलायितम् ॥
तस्यातिदारुणे दंष्ट्रे, अभूतां क्रकचाकृती ।
आज्वल्यमाने अङ्गार–शकट्याविव लोचने ॥
घोणारन्ध्रे महाघोरे, महीधरगुहे इव ।
भृकुटीभङ्गुरे भीमे, महोरग्याविव भ्रुवौ ॥ "

પ૦ ૧૦, સ૦ ૨, શ્લો૦ ૧૧૩–૧૧૬

અર્થાત્—" તેના પાતાળ જેવા મુખમાં રહેલી તેની જીભ તક્ષક નાગ જેવી દેખાવા લાગી, ઊંચા પર્વત જેવા મસ્તક ઉપરના તેના પીળા કેશ દાવાનલ જેવા ભાસવા લાગ્યા, તેની ભયાનક દાઢો કરવતના જેવી જણાવા લાગી, તેનાં નેત્રો અંગારાની સગડીની જેમ પ્રકાશવા લાગ્યાં, તેનાં નસકોરાં પર્વતની ગુફાનું ભાન કરાવા લાગ્યા અને તેની ભૃકુટી વડે ભંગુર ભમરો બે મોટી નાગણ હોય તેમ ભયંકર દેખાવા લાગી. "

આ પ્રમાણે તે સુર પોતાનું વધારે ને વધારે વિકરાળ તેમજ ઊંચું રૂપ બનાવતો જતો હતો તે વાત પ્રભુના લક્ષ્યમાં આવતાં તે પરાક્રમી પ્રભુએ તેની પીઠ ઉપર એક એવી મુક્કી મારી કે તરતજ તે વામન થઇ જઇને તે પ્રભુને નમી પડ્યો અને ઇન્દ્રનું કથન નહિ માનીને તેણે આ કાર્ય કર્યું હતું એમ પ્રભુ સમક્ષ તે કહેવા લાગ્યો. પ્રભુના ધૈર્યની પ્રશંસા કરીને તે સ્વસ્થાને ચાલ્યો ગયો.[1]

**' વીર ' શબ્દના સંબંધી વિચાર—**

' વીર ' શબ્દ માટે નિરૂક્ત[2] કરતાં એક વિદ્વાન્ કહે છે કે—

" विदारयति यत्कर्म, तपसा च विराजते ।
तपोवीर्येण युक्तश्च, तस्माद् वीर इति स्मृतः ॥ "

અર્થાત્—જે કર્મનું વિદારણ કરે છે તથા તપશ્ચર્યાથી વિરાજમાન છે તેમજ તપશક્તિથી યુક્ત છે, તે ' વીર ' કહેવાય છે. વીર પ્રભુએ અનાર્ય દેશમાં પણ વિહાર કર્યો હતો તેનું શું કારણ ? આના ઉત્તરમાં સમજવું કે કર્મનું વિદારણ કરવું એ તેમનું ધ્યેય હતું. આ ઉપરથી શું વીર પ્રભુમાં વીરત્વ હોવાનુ સિદ્ધ થતું નથી કે ? હજી પણ જો એ બાબત પરત્વે શંકા રહેતી હોય, તો એ ઉમેરવું અનાવશ્યક નહિ ગણાય કે વીર પ્રભુએ અતિશય ઘોર તપશ્ચર્યા કરી હતી. આ ઉપરથી પણ વીર પ્રભુનું વીરત્વ જોઇ શકાય છે.

' વીર ' શબ્દનો વ્યુત્પત્તિ-અર્થ પણ ઉપર્યુક્ત વાતની સાક્ષી પૂરે છે, કેમકે " विशेषेण ईरयति-प्रेरयति कर्माणि इति वीरः " અર્થાત્ જે વિશેષતઃ કર્મોને પ્રેરે છે, ધક્કા મારે છે, આત્માથી અલગા પાડી તેને દેશવટો દે છે, તે ' વીર ' છે. આ ' વીર ' શબ્દની વ્યુત્પત્તિ છે.

---

૧ સરખાવો આવશ્યક–નિર્યુક્તિ ( ગાથાંક ૭૨–૭૫ ).
૨ કોઇ પણ શબ્દમાત્રને ગ્રહણ કરી તેના ઉપર આખો પ્રયોગ લેવો તે ' નિરૂક્ત ' કહેવાય છે.

વીર પ્રભુની વીરતા તો જાણે તે તેમનો જન્મ-સિદ્ધ હક નહિ હોય એમ લાગે છે. કેમકે તેમના જન્મોત્સવના સમયે ઇન્દ્ર જ્યારે જલાભિષેક કરતા ખંચાયા, ત્યારે તે પ્રભુએ પોતાના ડાબા પગના અંગુઠા વડે મેરૂ પર્વત કંપાવી પોતાનું પરાક્રમ પ્રદર્શિત કર્યું હતું. તે ઉપરાંત આપણે ઉપર જોઇ ગયા તેમ આમલકી ક્રીડાદિક પ્રસંગે પણ તેમણે તેમનું વીરત્વ પૂરવાર કરી બતાવ્યું હતું. આથી કરીને એમને 'વીર' કહેવા તે તો ન્યાય્ય ગણાયજ. અરે તેમને 'મહાવીર' કહેવામાં આવે, તો તે પણ ખોટું નથી. શ્રુતકેવલી શ્રીમાન્ ભદ્રબાહુસ્વામી પણ કહે છે કે—

"[1]अयले भयभेरवाणं, परीसहोवसग्गाणं खन्तिखमे पडिमाणं पालए धीमं अरतिरतिसहे दविए वीरियसंपन्ने देवेहिं से णाम कयं समणे भगवं महावीरे" ॥

—કલ્પસૂત્ર, સૂ૰ १०८

*　　*　　*　　*　　*

अथ चतुर्थकाव्येन श्रीभगवतो विद्याधिक्यमाह—

शक्रेण पृष्टमखिलं त्वमुवक्थ यत् तद्
　जैनेन्द्रसंज्ञकमिहाजनि शब्दशास्त्रम् ।
तस्यापि पारमुपयाति न कोऽपि बुद्ध्या
　को वा तरीतुमलमम्बुनिधिं भुजाभ्याम् ? ॥ ४ ॥

**टीका**

हे वीर ! लेखशालाग्रहणावसरे शक्रेण-इन्द्रेण पृष्टं अखिलं-समस्तं यत् त्वमुवक्थ-सदुत्तराणि ऊचिवान्, तदिह-अस्मिन् लोके जैनेन्द्रसंज्ञकं शब्दशास्त्रं-व्याकरणमजनि-जातम् । जिनश्चेन्द्रश्च तौ देवते अस्येति जैनेन्द्रम् । इन्द्रश्चन्द्रः काशिकृत्स्नेत्य( त्याद्य )[2]ष्ट महावैयाकरणाः, तैस्तैः कृतं तन्नामकं व्याकरणं अजनि-समुत्पन्नमित्यर्थः । कोऽपि जनस्तस्यापि शब्दशास्त्रस्य पारं बुद्ध्या नोपयाति, गहनार्थत्वात् । उक्तमर्थमर्थान्तरन्यासेन द्रढयति-वेति पक्षान्तरे, अम्बुनिधिं-समुद्रं भुजाभ्यां तरीतुं कः [क्षमः] अलं-कः समर्थः ? न कोऽपीत्यर्थः ॥ ४ ॥

**अन्वयः**

शक्रेण पृष्टं अखिलं यत् त्वं उवक्थ, तद् इह जैनेन्द्र-संज्ञकं शब्द-शास्त्रं अजनि; तस्य अपि पारं कः अपि बुद्ध्या न उपयाति, ( यतः ) कः वा भुजाभ्यां अम्बु-निधिं तरीतुं अलम् ? ।

---

१ अचलो भयभैरवयोः परीषहोपसर्गाणां क्षान्तिक्षमः प्रतिमानां पालकः धीमान् अरतिरतिसहः द्रव्यं वीर्यसंपन्नः देवैः तस्य नाम कृतं श्रमणो भगवान् महावीरः ।

२ સરખાવો શ્રીભગવતીના પ્રથમ શતકના પ્રથમ ઉદ્દેશના પાંચમા સૂત્ર ઉપરની શ્રીઅભયદેવસૂરિકૃત વૃત્તિ.

## શબ્દાર્થ

शक्रेण ( मू० शक्र )=સૌધર્મેન્દ્રથી.
पृष्टं ( मू० पृष्ट )=પૂછાયેલ.
अखिलं ( मू० अखिल )=સમસ્ત.
त्वं ( मू० युष्मद् )=તેં.
उवक्थ ( धा० वच् )=કહ્યું.
यद् ( मू० यद् )=જે.
तद्=તે.
जैनेन्द्र=જિન અને ઇન્દ્ર છે દેવતા જેના એવા.
संज्ञा=નામ.
जैनेन्द्रसंज्ञकं=જૈનેન્દ્ર છે નામ જેનું એવુ.
इह=આ લોકને વિષે.
अजनि ( धा० जन् )=થયુ.
शब्द=શબ્દ.
शास्त्र=શાસ્ત્ર.
शब्दशास्त्रं=વ્યાકરણ.
तस्य ( मू० तद् )=તેનો.
अपि=પણ.
पारं ( मू० पार )=પાર.
उपयाति ( धा० या )=જાય છે.
न=નહિ.
कः ( मू० किम् )=કોઇ.
बुद्धया ( मू० बुद्धि )=બુદ્ધિ વડે.
वा=અથવા.
तरीतुं ( धा० तृ )=તરવાને.
अलं=સમર્થ.
अम्बु=જલ.
निधि=સમૂહ.
अम्बुनिधिं=સમુદ્રને.
भुजाभ्यां ( मू० भुज )=બે હસ્તો વડે.

## શ્લોકાર્થ

### વીર પ્રભુનું અપૂર્વ વિદ્યા-બલ—

"**સૌધર્મેન્દ્રે** પૂછેલા ( પ્રશ્નના ઉત્તર તરીકે ) જે સર્વ તેં કહ્યું, તે આ લોકને વિષે **જૈનેન્દ્ર** નામના વ્યાકરણ તરીકે ( પ્રસિદ્ધ ) થયુ. આ વ્યાકરણ (ગહન હોવાને લીધે) બુદ્ધિ વડે કોઇ પણ તેનો પાર પામતો નથી; અથવા હાથ વડે સાગરને તરી જવામાં કોઇ સમર્થ છે ખરો કે?"—૪

## સ્પષ્ટીકરણ

### વીર પ્રભુનું નિશાળ-ગરણું—

**વીર** પ્રભુ વિદ્યાભ્યાસ કરવાને લાયક થયા, એટલે તેમના અપૂર્વ જ્ઞાનથી અજ્ઞાત એવાં તેમનાં માતાપિતાએ તેમને નિશાળે બેસાડવા વિચાર કર્યો અને તદનુસાર પોતાના રાજ્યમાંના ઉચ્ચ પણ્ડિત પાસે તેમને લઇ ગયા. આવા અયુક્ત કાર્યની **સૌધર્મેન્દ્રને** ખબર પડી એટલે તે બ્રાહ્મણનું રૂપ લઇને લેખ-શાલામાં આવ્યો અને વ્યાકરણને લગતા કેટલાક પ્રશ્નો **વીર** પ્રભુને પૂછયા. આના ઉત્તરો સાંભળીને પણ્ડિત તો ઠંડોગાર થઇ ગયો. પછી **સૌધર્મેન્દ્ર** પ્રભુની સ્તુતિ કરી ચાલતો થયો. પ્રભુને વ્યાકરણ વિષે પૂછેલા પ્રશ્નો અને તેના ઉત્તરો 'જૈનેન્દ્ર' વ્યાકરણ એવા નામથી પ્રસિદ્ધ થયા ( સરખાવો **આવશ્યક-નિર્યુક્તિ**ની ૭૫-૭૭ મી ગાથાઓ ).

### પદ્ય-અલંકાર

આ ચતુર્થ પદ્ય 'અર્થાન્તરન્યાસ' નામના અલંકારથી શોભી રહ્યું છે. **શ્રીહેમચન્દ્રસૂરિએ** **અર્થાન્તરન્યાસ**નું લક્ષણ નીચે મુજબ આપ્યું છે:—

" **विशेषस्य सामान्येन साधर्म्यवैधर्म्याभ्यां समर्थनमर्थान्तरन्यासः** "

—**કાવ્યાનુશાસન**, પૃ૦ ૨૭૮.

**આઠ વૈયાકરણો—**

( ૧ ) ઈન્દ્ર, ( ૨ ) ચન્દ્ર, ( ૩ ) કાશકૃત્સ્ન, ( ૪ ) આપિશલિ, ( ૫ ) શાકટાયન, ( ૬ ) પાણિનિ, ( ૭ ) અમર અને ( ૮ ) જૈનેન્દ્ર એ આઠ વૈયાકરણો છે.

આ વાતની નીચેનો શ્લોક સાક્ષી પૂરે છે.

" इन्द्रश्चन्द्रः काशकृत्स्ना—पिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा, जयन्त्यष्टौ च शाब्दिकाः ॥ "

અત્ર એ નિવેદન કરવું અસ્થાને નહિ ગણાય કે શ્રીવિનયવિજયે કલ્પસૂત્રના દશમા સૂત્રની વ્યાખ્યામાં વીસ વ્યાકરણો વિષે ઉલ્લેખ કર્યો છે.

उपदेशाधिक्यमाह—

धर्मस्य वृद्धिकरणाय जिन ! त्वदीया
प्रादुर्भवत्यमलसद्गुणदायिनी गौः ।
पेयूषपोषणपरा वरकामधेनु—
र्नाभ्येति किं निजशिशोः परिपालनार्थम् ? ॥ ५ ॥

**टीका**

हे जिन ! त्वदीया गौः—वाणी धर्मस्य वृद्धिकरणाय प्रादुर्भवति । किंलक्षणा गौः ? अमलान्-निर्मलान् सतः-समीचीनान् गुणान् ददातीत्येवंशीला 'अमलसद्गुणदायिनी' । उक्तमर्थं द्रढयति—वरा—प्रधाना कामधेनुः निजशिशोः-स्ववत्सस्य परिपालनार्थं किं नाभ्येति—संमुखं किं न समागच्छति ? समागच्छत्येव । किंविशिष्टा वरकामधेनुः ? ' पेयूषपोषणपरा' पेयूषं-अभिनवं पयस्तेन पोषणं तस्मिन् परा—तत्परा । " धेनुस्तु नवसूतिका " ( का० ४, श्लो० ३३३ ) इति हैमः । भगवतो वाणी कामधेनुरित्यर्थः ॥ ५ ॥

**अन्वयः**

( हे ) जिन ! त्वदीया अ-मल-सत्-गुण-दायिनी गौः धर्मस्य वृद्धि-करणाय प्रादुर्भवति; पेयूष-पोषण-परा वर-कामधेनुः निज-शिशोः परिपालनार्थं किं न अभ्येति ? ।

**શબ્દાર્થ**

धर्मस्य ( मू० धर्म )=ધર્મની.
वृद्धि=વધારો.
करण=( १ ) કાર્ય; ( २ ) હેતુ.
वृद्धिकरणाय=વૃદ્ધિના હેતુને અર્થે.
जिन ! ( मू० जिन )=જીત્યા છે રાગ અને દ્વેષ જેણે એવા ( સંબોધનાર્થે ), હે વીતરાગ !
त्वदीया ( मू० त्वदीय )=તારી.
प्रादुर्भवति ( धा० भू )=પ્રકટ થાય છે.
अमल=નિર્મલ.
सत्=સારા.
गुण=ગુણ.
दायिन्=આપનાર.
अमलसद्गुणदायिनी=નિર્મલ તેમજ સારા ગુણોને અર્પણ કરનારી.

गौः ( मू० गो )=વાણી.
पेयूष=તાજું દૂધ, પહેલા સાત દિવસની વીઆયેલી ગાયનું દૂધ
पोषण=પુષ્ટિ
पर=તત્પર
पेयूषपोषणपरा=નવીન દૂધની પુષ્ટિમાં તત્પર
वर=ઉત્તમ.
कामधेनु=સુરભિ, સ્વર્ગીય ગાય.
वरकामधेनुः=ઉત્તમ સુરભિ.
न=નહિ
अभ्येति ( धा० इ )=સંમુખ જાય છે.
किं=શું.
निज=પોતાના.
शिशु=બચ્ચું, બાળક.
निजशिशोः=પોતાના બાળકનું.
परिपालनार्थे=રક્ષણ કરવાને માટે.

### શ્લોકાર્થ

**પ્રભુનો ઉપદેશ-મહિમા—**

"હે વીતરાગ[1] ( પરમાત્મા ) ! નિર્મલ તેમજ ઉચિત ગુણોને અર્પણ કરનારી એવી તારી વાણીનો ધર્મની વૃદ્ધિ કરવાને માટે પ્રાદુર્ભાવ થાય છે ( તે યોગ્યજ છે, કેમકે ) શું નવીન દૂધની પુષ્ટિ (કરવા)માં તત્પર એવી ઉત્તમ કામ-ધેનુ પોતાના બાળકનું રક્ષણ કરવાને અર્થે સંમુખ જતી નથી કે ?"—૫

* * * *

**कर्मक्षये भगवतो नाम्नो माहात्म्यमाह—**

छिद्येत कर्मनिचयो भविनां यदाशु
त्वन्नामधाम किल कारणमीश ! तत्र ।
कण्ठे पिकस्य कफजालमुपैति नाशं
तच्चारुचूतकलिकानिकरैकहेतुः ॥ ६ ॥

### टीका

हे ईश !—हे स्वामिन् ! यद्—यस्माद्धेतोः भविनां-संसारिणां कर्मनिचयः-कर्मसमूहः आशु-शीघ्रं छिद्येत-छेदं प्राप्नुयात् तत्र किलेति निश्चितं त्वन्नामधाम कारणं, तव नाम त्वन्नाम तदेव धाम-तेजः तदेव हेतुः । दृष्टान्तमाह—पिकस्य-कोकिलस्य कण्ठे कफजालं यन्नाशमुपैति-हानिं प्राप्नोति तत् चारुचूतकलिकानिकरैकहेतुः—चारुः-मनोहरो यश्चूत-आम्रस्तस्य कलिकानिकरो-मञ्जरीसमूहः स एव एकः-अद्वितीयो हेतुरद्वितीयं कारणम् । हेतुशब्दोऽजहल्लिंगः ॥ ६ ॥

### अन्वयः

( हे ) ईश ! यद् भविनां कर्म-निचयः आशु छिद्येत, तत्र त्वत्-नामन्-धाम किल कारणं; पिकस्य कण्ठे कफजालं नाशं उपैति, तद् चारु-चूत-कलिका-निकर-एक-हेतुः ।

---

૧ વીતરાગ સંબંધી માહિતી માટે જુઓ સ્તુતિ-ચતુર્વિંશતિકા ( પૃ૦ ૪૯ ).

## શબ્દાર્થ

छिद्येत ( धा० छिद् )=છેદાઇ જાય.
कर्मन्=કર્મ, આત્માની નૈસર્ગિક શક્તિને પણ આચ્છાદિત કરનાર પુદ્ગલ-વિશેષ.
निचय=સમૂહ, સમુદાય, જથ્થો.
कर्मनिचयः=કર્મનો સમુદાય.
भविनां ( मू० भविन् )=સંસારીઓના.
यद्=જેથી.
आशु=સત્વર, જલદી
त्वद्=દ્વિતીયપુરૂષવાચક સર્વનામ.
नामन्=નામ.
धामन्=તેજ
त्वन्नामधाम=તારૂં નામરૂપી તેજ.
किल=ખચિત.
कारणं ( मू० कारण )-હેતુ.
ईश ! ( मू० ईश )-હે પ્રભુ !
तत्र=તેમાં
कण्ठे ( मू० कण्ठ )-કણ્ઠમાં, ગળામાં.
पिकस्य ( मू० पिक )-કોકિલાના, કોયલના.
कफ=કફ.
जाल-સમૂહ.
कफजालं=કફનો સમૂહ.
उपैति ( धा० इ )=પ્રાપ્ત થાય છે
नाशं ( मू० नाश )=વિનાશને.
तद्=ત
चारु-મનોહર
चूत-આમ્ર, આંબા
कलिका=મંજરી, મોર.
निकर=સમુદાય.
एक=અદ્વિતીય, અસાધારણ.
हेतु-કારણ
चारुचूतकलिकानिकरैकहेतुः-મનોહર આમ્ર-મંજરીના સમુદાયરૂપી અદ્વિતીય કારણ.

## શ્લોકાર્થ

### કર્મ-ક્ષયનું કારણ નાથનું નામ—

"હે પરમેશ્વર ! જેથી સંસારી ( જીવો ) નાં [1]કર્મનો સમુદાય સત્વર છેદાઇ જાય છે, તેમાં તારૂં નામરૂપી તેજ નક્કી કારણ છે. ( જેમકે ) કોકિલાના કણ્ઠને વિષે ( બાઝેલી ) કફની જાલ નાશ પામે છે, તેમાં મનોહર આમ્ર-મંજરીનો સમુદાય અદ્વિતીય કારણ છે."—૬

भगवता मिथ्यात्वं हतं, तदन्यदेवेषु स्थितमित्याह—

'देवार्य'देव ! भवता कुमतं हतं तन्-
मिथ्यात्ववत्सु सततं शतशः सुरेषु ।
संतिष्ठतेऽतिमलिनं गिरिगह्वरेषु
सूर्यांशुभिन्नमिव शार्वरमन्धकारम् ॥ ७ ॥

## टीका

हे देवार्यदेव !-हे वर्धमान ! । " देवार्यो ज्ञातनन्दनः " ( का० १, श्लो० ३० ) इति हैमः । यद् भवता-त्वया कुमतं-कुत्सितमतं हतं तन् शतशो " बह्वादेः शस् " शतसहस्रादिसंख्येषु सुरेषु 'मिथ्यात्ववत्सु' मिथ्यात्वमस्ति येषु ते मिथ्यात्ववन्तस्तेषु संतिष्ठते-निरन्तरं तिष्ठति । किंविशिष्टं कुमतं ? अतिमलिनं-महामलीमसम् । केषु किमिव ? गिरिगह्वरेषु सूर्यांशुभिन्नं (शार्वरं-

---

૧ કર્મનું સ્થૂલ સ્વરૂપ स्तुति-चतुर्विंशतिकाના પૃ૦ ૬-૭ માં આલેખવામાં આવ્યુ છે.

शर्वरीसम्बन्धि) अन्धकारमिव, गिरीणां–पर्वतानां गह्वराणि–गुहास्थानानि तेषु सूर्यस्यांशुभि-भिन्नं–सूर्यकिरणैः प्रहतमन्धकारमिव ॥ ७ ॥

### अन्वयः

( हे ) 'देवार्य'-देव ! ( यद् ) भवता अति-मलिनं कु-मतं हतं, तद् शतशः मिथ्यात्ववत्सु सुरेषु सूर्य-अंशु-भिन्नं शार्वरं अन्धकारं गिरि-गह्वरेषु इव सततं संतिष्ठते ।

### શબ્દાર્થ

**देवार्य**=દેવાર્ય, જ્ઞાત-નન્દન, **મહાવીર.**
**देव**=પ્રભુ, સ્વામી.
**देवार्यदेव !**=હે દેવાર્ય દેવ !
**भवता** ( મૂ० भवत् )=આપ વડે.
**कुमतं** ( મૂ० कुमत )=દુષ્ટ મત.
**हतं** ( મૂ० हत )=હણાયુ.
**तद्** ( મૂ० तद् )=તે
**मिथ्यात्ववत्सु** ( મૂ० मिथ्यात्ववत् )=મિથ્યાત્વીઓને વિષે.
**सततं**=હમેશને માટે.
**शतशः**=સેકડો.
**सुरेषु** ( મૂ० सुर )=દેવોને વિષે
**संतिष्ठते** ( ધા० स्था )=નિરન્તર રહે છે.
**अति**=અતિશય.
**मलिन**=મલિન, દૂષિત.
**अतिमलिनं**=અતિશય મલિન.
**गिरि**=પર્વત
**गह्वर**=ગુફા.
**गिरिगह्वरेषु**=પર્વતોની ગુફાઓને વિષે.
**सूर्य**=રવિ, સૂરજ
**अंशु**=કિરણ.
**भिन्न** ( ધા० भिद् )=ભેદાયેલ
**सूर्यांशुभिन्नं**=રવિનાં કિરણો વડે ભેદાયેલુ.
**इव**=જેમ
**शार्वरं** ( મૂ० शार्वर )=રાત્રિ-સબંધી.
**अन्धकारं** ( મૂ० अन्धकार )=અધકાર, અધારૂં.

### શ્લોકાર્થ

**ભગવાને મારી હઠાવેલ મિથ્યાત્વને મળેલો આશ્રય—**

" હે **દેવાર્ય** દેવ ! જે અતિશય મલિન એવા દુષ્ટ મતનો આપે નાશ કર્યો, તે, જેમ રવિનાં કિરણો વડે ભેદાયલો ( કૃષ્ણ પક્ષની ) રાત્રિ–સંબંધી ( સમસ્ત ) અંધકાર પર્વતોની ગુફાઓને વિષે હમેશાં રહે છે, તેમ તે કુમત ( પણ ) સેકડો મિથ્યાત્વી ( ઉન્માર્ગી ) દેવોને વિષે નિરંતર રહે છે. "—૭

भगवतो नाम्न आधिक्यमाह—

त्वन्नाम ' वीर ' इति देव ! सुरे परस्मिन्
केनापि यद्यपि धृतं न तथापि शोभाम् ।
प्राप्नोत्यमुत्र मलिने किमृजीषपृष्ठे
मुक्ताफलद्युतिमुपैति ननूदबिन्दुः ? ॥ ८ ॥

### टीका

हे देव ! वीर इति त्वदीयं नाम केनापि जनेन परस्मिन् सुरे–अन्यस्मिन् देवे यद्यपि धृतं द्विपञ्चाशद् वीराः क्षेत्रपालादय उच्यन्ते ( तेषां ) वीरनाम स्थापितं, तथापि तन्नाम तस्मिन् शोभां

न प्राप्नोति । तत्र दृष्टान्तमाह—अमुत्र–अमुष्मिन् लोके ननु–निश्चितमुदबिन्दुः–दकस्य बिन्दुः–जलकणो मलिने ऋजीषपृष्ठे–पिष्टपाकभृत्पीठे किं मुक्ताफलद्युतिं–मौक्तिककान्तिं [ किं ] उपैति–प्राप्नोति ? न प्राप्नोतीत्यर्थः । ऋजीषपृष्ठतुल्योऽन्यसुरः, तत्र वीर इति नामोदकबिन्दुर्न शोभत इत्यर्थः ॥ ८ ॥

### अन्वयः

( हे ) देव ! यद्यपि 'वीरः' इति त्वत्-नाम केन अपि परस्मिन् सुरे धृतं, तथापि ( तत् तस्मिन् ) शोभां न प्राप्नोति; अमुत्र ( हि ) मलिने ऋजीष-पृष्ठे उदन्-बिन्दुः मुक्ताफल-द्युतिं ननु उपैति किम् ?।

### શબ્દાર્થ

त्वन्नाम=તારૂં નામ.
वीरः ( मू० वीर )=વીર.
इति=એમ.
देव ! ( मू० देव )=હે પરમેશ્વર !
सुरे ( मू० सुर )=દેવને વિષે.
परस्मिन् ( मू० पर )=અન્ય.
केनापि ( मू० किम् )=કોઇકથી.
यद्यपि=જોકે.
धृतं ( मू० धृत )=સ્થાપન થયુ
न=નહિ.
तथापि=તોપણ.
शोभां ( मू० शोभा )=શોભાને, તેજને
प्राप्नोति ( धा० आप् )=પામે છે.
अमुत्र=આ લોકને વિષે.
मलिने ( मू० मलिन )=મલિન, મેલવાળા.
किं=શુ.
ऋजीष=એક જાતનુ પાત્ર, તળવાનો પેણો.
पृष्ठ=પીઠ.
ऋजीषपृष्ठे=ઋજીષની પીઠ ઉપર.
मुक्ताफल=મોતી.
द्युति=પ્રકાશ.
मुक्ताफलद्युतिं=મોતીના પ્રકાશને.
उपैति ( धा० इ )=પામે છે
ननु=ખરેખર.
उदन्=જલ
बिन्दु=ટીપુ.
उदबिन्दुः=જલનુ ટીપુ.

### શ્લોકાર્થ

**પ્રભુના નામની વિશેષતા—**

" હે પરમેશ્વર ! જોક કોઇકે તારૂ **વીર** એવું નામ અન્ય દેવને વિષે સ્થાપન કર્યું, તોપણ તે ત્યાં શોભા પામતું નથી. ( કેમકે ) આ લોકને વિષે ઋજીષ પાત્રની મલિન પીઠ ઉપર ( રહેલું ) જલનું બિન્દુ શું મુક્તાફલની કાન્તિને ખરેખર પામે કે ?"—૮

### સ્પષ્ટીકરણ

**શ્લોકનું તાત્પર્ય—**

આ શ્લોકમાંથી તાત્પર્ય એ નીકળે છે કે જેમ સિંહનું ચામડું પહેરવાથી શિયાળ સિંહ બનતો નથી, તેમ મનુષ્ય તો શું પણ કાઇક ( **હનુમાન્** ) દેવ પણ જો **વર્ધમાન** સ્વામીનું **વીર** એવું નામ ધારણ કરે, તોપણ તે તેને ચરિતાર્થ કરી શકે નહિ. અત્ર આ વાત 'બાવન વીર'ને નામે ઓળખાતા દેવ આશ્રીને કહેવામાં આવી છે. આ ' બાવન વીર'થી ઘંટાકર્ણ વિગેરે સમજવા.

*　*　*　*　*

भगवतो ज्ञानोत्पत्तिविशेषमाह—

ज्ञाने जिनेन्द्र ! तव केवलनाम्नि जाते
लोकेषु कोमलमनांसि भृशं जहर्षुः ।
प्रद्योतने समुदिते हि भवन्ति किं नो
पद्माकरेषु जलजानि विकाशभाञ्जि ? ॥ ९ ॥

**टीका**

हे जिनेन्द्र ! तव केवलनाम्नि ज्ञाने जाते—उत्पन्ने सति लोकेषु—स्वर्ग-मर्त्य-पातालेषु कोमल-मनांसि लक्षणया भव्यजनानां मनांसि भृशं—अत्यर्थं जहर्षुः—हर्षं प्रापुः । हीति उक्तमर्थं द्रढयति—प्रद्योतने—श्रीसूर्ये समुदिते—उद्गते सति पद्माकरेषु—तडागेषु जलजानि—कमलानि विकाशभाञ्जि—विकस्वराणि किं नो भवन्ति ? भवन्त्येव । "प्रद्योतनस्तपनः" ( का० २, श्लो० ९ ) इति हैमः ॥ ९ ॥

**अन्वयः**

( हे ) जिन-इन्द्र ! तव केवल-नाम्नि ज्ञाने जाते लोकेषु कोमल-मनांसि भृशं जहर्षुः; हि प्रद्योतने समुदिते किं पद्म-आकरेषु जलजानि विकाशभाञ्जि नो भवन्ति ? ।

**શબ્દાર્થ**

ज्ञाने ( मू० ज्ञान )=જ્ઞાન, બોધ.
जिनेन्द्र ! ( मू० जिनेन्द्र )=હે જિનેશ્વર, હે જિનવર!
तव ( मू० युष्मद् )=તારે વિષે.
केवल=કેવલ-જ્ઞાન, સર્વજ્ઞતા.
केवलनाम्नि=કેવલ એ છે નામ જેનું એવા.
जाते ( मू० जात )=ઉત્પન્ન થયે.
लोकेषु=( ત્રણે ) લોકને વિષે.
कोमल=નરમ.
मनस्=ચિત્ત.
कोमलमनांसि=નરમ ચિત્તો.
भृशं=અત્યન્ત.
जहर्षुः ( धा० हृष् )=આનંદ પામતા હવા.
प्रद्योतने ( मू० प्रद्योतन )=સૂર્ય.
समुदिते ( मू० समुदित )=ઉગ્યે.
हि=કારણ કે.
भवन्ति ( धा० भू )=થાય છે.
किं=શું.
नो=નહિ.
पद्माकरेषु ( मू० पद्माकर )=તળાવોને વિષે, સરોવરોને વિષે.
जलजानि ( मू० जलज )=કમળો.
विकाशभाञ्जि ( मू० विकाशभाज् )=વિકાસને ભજનારા, વિકસ્વર.

**શ્લોકાર્થ**

**પ્રભુના કેવલજ્ઞાનનો મહિમા—**

"હે જિનેશ્વર ! જ્યારે તને કેવલ એ નામનું જ્ઞાન (કેવલ-જ્ઞાન) ઉત્પન્ન થયું, ત્યારે (સ્વર્ગ, મર્ત્ય અને પાતાળ એ ત્રણે ) લોકને વિષે ( ભવ્ય પ્રાણીઓનાં ) કોમળ ચિત્તો અત્યંત આનંદ પામ્યાં; કેમકે જ્યારે સૂર્યનો ઉદય થાય છે, ત્યારે શું (કમલના સમૂહવાળાં) સરોવરોને વિષે કમલો વિકસ્વર થતાં નથી કે ?"—૯

## સ્પષ્ટીકરણ

**કલ્યાણક-વિચાર—**

દરેક તીર્થંકરના ( ૧ ) ચ્યવન, ( ૨ ) જન્મ, (૩) દીક્ષા–ગ્રહણ, ( ૪ ) કેવલજ્ઞાનની પ્રાપ્તિ અને (૫) નિર્વાણ એ પાંચ સમયે અર્થાત્ એ પાંચે કલ્યાણકો વખતે કેટલીક અલૌકિક ઘટનાઓ બને છે. જેમકે એક તો આ વાતની ખબર ઇન્દ્રો પોતાનાં આસનો કમ્પવાથી જાણે છે. વળી આ પાંચે કલ્યાણકોને વિષે સર્વ જીવોને થોડીક વારને સારૂ શાન્તિ મળે છે, તેમજ તેમને હર્ષ પણ થાય છે. વિશેષમાં નરક જેવા સ્થાનમાં પણ પ્રદ્યોત અને સાતા ( સુખ ) થઇ રહે છે.

પ્રસ્તુતમાં કેવલજ્ઞાનરૂપી સૂર્યનો ઉદય થવાથી ભવ્ય-કમલો ખીલી રહે છે. ઇન્દ્રો સમવસરણ ( ધર્મ-દેશના-મણ્ડપ ) ની રચના કરવા અને કેવલજ્ઞાનીની અમૃત દેશનાનું પાન કરવા અધીરા બની જાય છે.

*　　*　　*　　*　　*

**सेवके उपकारविशेषमाह—**

वादाय देव ! समियाय य 'इन्द्रभूतिः'
तस्मै प्रधानपदवीं प्रददे स्वकीयाम् ।
धन्यः स एव भुवि तस्य यशोऽपि लोके
भूत्याऽऽश्रितं य इह नाऽऽत्मसमं करोति ॥ १० ॥

### टीका

हे देव ! य इन्द्रभूतिः–गौतमगोत्रीयो ब्राह्मणो वादाय–वादं कर्तुमनाः समियाय–समाजगाम, तस्मै स्वकीयां प्रधानपदवीं भवान् प्रददे । प्रददे इति प्रथमपुरुषैकवचनस्य क्रियाभिसंबन्धाद् भवानिति कर्तृपदं ग्राह्यम् । तस्मै इन्द्रभूतये दानपात्रे चतुर्थी । उक्तमर्थं द्रढयति—भुवि–पृथिव्यां स एव धन्यो लोकेऽपि तस्य यशः–तस्य कीर्तिः । तस्येति कस्य ? यो ना–यः पुमान् आश्रितं–सेवार्थमागतं पुरुषं भूत्या–ऋद्ध्या कृत्वा आत्मसमं–आत्मना तुल्यं करोति, स एव ना । नृशब्दस्य प्रथमैकवचनम् । स एव नरो धन्य इत्यर्थः ॥ १० ॥

### अन्वयः

( हे ) देव ! यः 'इन्द्रभूतिः' वादाय समियाय, तस्मै ( भवान् ) स्वकीयां प्रधान-पदवीं प्रददे; यः ना इह आश्रितं भूत्या आत्मन्-समं करोति, सः एव भुवि धन्यः, तस्य यशः अपि लोके ।

### શબ્દાર્થ

| | |
|---|---|
| **वादाय** ( मू० वाद )=વાદાર્થે. | **इन्द्रभूतिः** (मू० इन्द्रभूति)=ઇન્દ્રભૂતિ, વીર પ્રભુના પ્રથમ ગણધર. |
| **देव** ! ( देव )=હે ઈશ્વર ! | **तस्मै** ( मू० तद् )=તેને. |
| **समियाय** ( धा० इ )=આવ્યો. | **प्रधान**=ઉત્તમ, મુખ્ય. |
| **यः** ( मू० यद् )=જે. | |

[1] આ સંબંધમાં જુઓ સ્તુતિ-ચતુર્વિંશતિકા ( પૃ૦ ૩૦–૩૩ ).

**पदवी**=હોદ્દો, પદ.
**प्रधानपदवीं**=મુખ્ય પદ.
**प्रददे** ( धा० दा )=આપ્યું.
**स्वकीयां** ( मू० स्वकीया )=નિજ, પોતાનું.
**धन्यः** ( मू० धन्य )=ધન્ય, પ્રશંસનીય.
**सः** ( मू० तद् )=તે.
**एव**=જ.
**भुवि** ( मू० भू )=પૃથ્વીને વિષે.
**तस्य** ( मू० तद् )=તેની.
**यशः** ( मू० यशस् )=કીર્તિ.
**अपि**=પણ.
**लोके** ( मू० लोक )=જગત્‌ને વિષે.
**भूत्या** ( मू० भूति )=ઋદ્ધિ વડે.
**आश्रितं** ( मू० आश्रित )=આશ્રય લીધેલાને, શરણે આવેલાને.
**इह**=આ જગત્‌માં.
**ना** ( मू० नृ )=મનુષ્ય
**आत्मन्**=આત્મા.
**सम**=સમાન, તુલ્ય.
**आत्मसमं**=પોતાના સમાન.
**करोति** ( धा० कृ )=કરે છે.

## શ્લોકાર્થ

**પ્રભુનો સેવક પ્રતિ અનુપમ ઉપકાર—**

"હે દેવાધિદેવ ! જે **ઇન્દ્રભૂતિ** (આપની સાથે) વાદ કરવાને આવ્યા, તેને આપે સ્વકીય ઉત્તમ પદ (ગણધર-પદ) અર્પણ કર્યું. આ કૃત્ય યોગ્યજ છે, કેમકે જે મનુષ્ય પોતાનો આશ્રય લીધેલા (સેવક)ને આ જગત્‌માં ઋદ્ધિ વડે પોતાના સમાન કરે છે, તેજ ખરેખર પૃથ્વી ઉપર પ્રશંસનીય છે અને જગત્‌માં તેનીજ કીર્તિ (ધન્યવાદને પાત્ર) છે."—૧૦

## સ્પષ્ટીકરણ

**અર્થ-વિચાર—**

'नात्मसमं' નું 'न+आत्मसमं' એમ પદચ્છેદ કરવાથી બીજો અર્થ સ્ફુરે છે અને તે એ છે કે જે (સ્વામી) પોતાના સેવકને સંપત્તિએ કરીને પોતાના સમાન કરતો નથી, તેને પૃથ્વી ઉપર ધન્યવાદ ઘટે છે, તેમજ તેની કીર્તિ પણ તેને મુબારકજ છે !!! આ 'વક્રોક્તિ' છે, અર્થાત્ કટાક્ષના ઉદ્ગાર છે. કહેવાની મતલબ એ છે કે જે સ્વામીની સાચા દિલથી સેવા કરવા છતાં પણ દાસત્વ કાયમ રહે, તે સ્વામીથી શું ? તેની કીર્તિ તેનેજ મુબારક હોજો.

**ખરો ઉપકારી કોણ ?—**

આના ઉત્તર સારૂ વિચારો આ નિમ્ન-લિખિત શ્લોકઃ—

"उपकारिषु यः साधुः, साधुत्वे तस्य को गुणः ?।
अपकारिषु यः साधुः, स साधुः सद्भिरुच्यते ॥"

અર્થાત્ ઉપકાર કરનારા મનુષ્યો પ્રતિ જે સાધુ હોય, તેના સાધુત્વમાં શું ગુણ છે ? અપકાર કરનાર તરફ જે સદ્વર્તન રાખે, તેજ સાધુ એમ સંતો કહે છે. આ વાતને ન્યાયવિશારદ મહામહોપાધ્યાય શ્રી**યશોવિજયજી** પણ ટેકો આપે છે, કેમકે ઉપાધ્યાયશ્રી [1]**વિનયવિજયજી**-કૃત **શ્રીપાલરાસ**માં ચોથા ખંડની આઠમી ઢાલમાં તેઓ કથે છે કે—

---

૧ 'શ્રીપાલરાસ' **વિનયવિજયજી**એ બનાવવા માંડ્યો હતો, પરંતુ તેની સાતસે અને પચાસ ગાથા રચ્યા બાદ તેઓ સ્વર્ગે સિધાવ્યા અને ત્યાર બાદ તેમના સંકેતાનુસાર ઉપાધ્યાયશ્રી **યશોવિજયજી**એ બાકીનો રાસ પૂરો કર્યો. જુઓ આ સંબંધમાં એ રાસનો કળશ.

